परांबाया भज नित्यं पदांबुजम् । नित्यमाराध्य तञ्चाहं निर्वृतिं परमां गतः ॥ १५२ ॥

हे नारदजी ! जो कुछ तुमने हमसे पूछा, वह सब कहा । अब तुम नित्य श्रीदेवीजीके चरणकमलोंका भजन करो । मैंभी नित्य आराधना करके परम निर्वृतिको प्राप्त होगयाहूं ॥ १५२ ॥

## व्यास उवाच ।

इति राजन्नारदाय प्रोक्त्वा सर्वमनुत्तमम् । समाधि-मीलिताक्षस्तु दध्यौ देवीपदांबुजम् ॥ १५३ ॥ नारायणस्तु भगवान् मुनिवर्यशिखामणिः ॥ नारदोऽपि ततो नत्वा गुरुं नारायणं परम् । जगाम सद्यस्तपसे देवीदर्श-नलालसः ॥ १५४ ॥

## इति सप्तमः पटलः ॥ ७ ॥

व्यासजी बोले–इस प्रकार भगवान् नारायणजीने नारदजीसे सब उत्तम दीक्षाविधि कही और आंखोंको मूंदकर समाधि लगाकर देवीजीके चरणकमलोंका ध्यान किया तब मुनिवर्य नारदजीभी देवीके दर्शनकी लालसासे परमगुरु नारायणजीको नमस्कार करके तप करनेके लिये चले गये ॥ १५३ ॥ १५४ ॥

इति भाषाभाष्यसमेत गायत्रीतंत्रका सप्तम पटल समाप्त ॥ ७ ॥

# अथाष्टमः पटलः ।

## श्रीनारायण उवाच ।

भूतिशुद्धिप्रकारं च कथयामि महामुने । मूलाधारा-त्समुत्थाय कुंडलीं परदेवताम् ॥ १ ॥ सुषुम्णामार्गमा-श्रित्य ब्रह्मरंध्रगतां स्मरेत् । जीवं ब्रह्मणि संयोज्य हंसमं-त्रेण साधकः ॥२॥ पादादिं जानुपर्यंतं चतुष्कोणं सव-ज्रकम् । लंबीजाढ्यं स्वर्णवर्णं स्मरेदवनिमण्डलम्॥३॥ जान्वाद्यानाभि चंद्रार्धनिभं पद्मद्वयांकितम् । वंबीज-युक्तं श्वेताभं नभसो मंडलं स्मरेत् ॥ ४ ॥ नाभेर्हृदय-पर्यंतं त्रिकोणं स्वस्तिकान्वितम् । रंबीजेन युतं रक्तं स्मरेत्पावकमण्डलम् ॥ ५ ॥ हृदो भ्रूमध्यपर्यंतं वृत्तं षड्बिंदुलांछितम् । यंबीजयुक्तं धूम्राभं नभस्वन्मडलं स्मरेत् ॥ ६ ॥ आब्रह्मरन्ध्रं भ्रूमध्याद्वृत्तं स्वच्छं मनो-हरम् । हंबीजयुक्तमाकाशमंडलं च विचिंतयेत् ॥ ७ ॥ एवं भूतानि संचिंत्य प्रत्येकं संविलापयेत् । भुवं जले जलं वह्नौ वह्निं वायौ नभस्यमुम् ॥ ८ ॥ विलाप्य खमहंकारे महत्तत्त्वेऽप्यहंकृतिम् । महांतं प्रकृतौ माया-

मात्मानि प्रविलापयेत् ॥ ९ ॥ शुद्धसंविन्मयो भूत्वा चिंतयेत्पापपूरुषम् । वामकुक्षिस्थितं कृष्णमंगुष्ठपरिमाणकम् ॥ १० ॥ ब्रह्महत्याशिरोयुक्तं कनकस्तेयबाहुकम् । मदिरापानहृदयं गुरुतल्पकटियुतम् ॥ ११ ॥ तत्संसर्गिपदद्वंद्वमुपपातकमस्तकम् । खड्गचर्मधरं दुष्टमधोवक्त्रं सुदुःसहम् ॥ १२ ॥ वायुबीजं स्मरन्वायुं सम्पूर्यैनं विशोषयेत् । स्वशरीरयुतं मंत्री वह्निबीजेन निर्दहेत् ॥ १३ ॥ कुम्भके परिजप्तेन ततः पापनरोद्भवम् । बहिर्भस्म समुत्सार्य वायुबीजेन रेचयेत् ॥ १४ ॥ सुधाबीजेन देहोत्थं भस्म संप्लावयेत्सुधीः । भूबीजेन घनीकृत्य भस्म तत्कनकांडवत् ॥ १५ ॥ विशुद्धमुकुराकारं जपन्बीजं विहायसः । मूर्द्धादिपादपर्यन्तान्यंगानि रचयेत्सुधीः ॥ १६ ॥ आकाशादीनि भूतानि पुनरुत्पादयेत्स्थितः । सोऽहं मन्त्रेण चात्मानमानयेद् हृदयाम्बुजे ॥ १७ ॥ कुण्डलीजीवमादाय परसंगात्सुधामयम् । संस्थाप्य हृदयांभोजे मूलाधारगतां स्मरेत् ॥ १८ ॥ रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः शूलं कोदण्डमिक्षूद्भवमथगुणमप्यंकुशं पंच बाणान् । बिभ्राणा-

सृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या देवी बालार्क-वर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥ १९ ॥ एवं ध्यात्वा प्राणशक्तिं परमात्मस्वरूपिणीम् । विभूतिधारणं कार्यं सर्वाधिकृतिसिद्धये ॥ २० ॥ विभूतेर्विस्तरं वक्ष्ये धारणे च महाफलम् । श्रुतिस्मृतिप्रमाणोक्तं भस्मधार-णमुत्तमम् ॥ २१ ॥

## इति अष्टमः पटलः ॥ ८ ॥

श्रीनारायणजी वर्णन करते हैं कि हे महामुने ! भूतशुद्धि कहते हैं- मूलाधारसे उठाके परदेवता कुण्डलीको सुषुम्णामार्गसे ब्रह्मरंध्रमें प्राप्त कर स्मरण करे, फिर हंस मंत्रसे जीवको ब्रह्ममें योजन करे, फिर पादादि जानुपर्यंत वज्रसहित चतुष्कोण लंबीज करके युक्त स्वर्णवर्ण पृथ्वीमण्डलका स्मरण करे फिर जानुसे नाभिपर्यंत अर्द्धचन्द्राकार कमलद्वयसहित यंबीजयुत श्वेतवर्णजलमण्डलका स्मरण करे, फिर नाभिसे हृदयपर्यंत स्वस्तिकाकार रम्बीजयुक्त रक्तवर्ण अग्निमण्डलका स्मरण करे, फिर हृदयसे भौंहके मध्यपर्यंत गोलाकार छः विन्दुओं करके चिह्नित यंबीजयुक्त धूमाकार वायु-मण्डलका स्मरण करे, फिर भौंहके मध्यसे ब्रह्मरन्ध्रपर्यंत गोल स्वच्छ मनोहर हंबीजसंयुक्त आकाशमण्डलकी चिन्तना करे, इस प्रकार भूतोंकी चिन्तना कर प्रत्येकको क्रमसे एकमें दूसरेको मिलावे यथा जलमें पृथ्वी, अग्निमें जल, वायुमें अग्नि, आकाशमें वायु

मिलाके, अहंकारमें आकाश, महत्त्वमें अहंकार, प्रकृतिमें महत्तत्व, आत्मामें प्रकृति मिलाके शुद्ध संविन्मय होके वाम कोखमें स्थित कृष्णवर्ण अंगुष्ठपरिमाण शिरपै ब्रह्महत्या लादे, सुवर्ण चुरानेको बाहु लपकाये, मदिरापानमें हृदय लगाये, गुरु शय्यापर दोनों पैर धरे, मस्तकपर छोटे २ पाप चढाये, तरवार ढाल लिये, दुष्ट प्रकृति, नीचे मुख किये, बडा दुःसह ऐसे पापपुरुषकी चिन्तना करे और यंबीजका स्मरण कर पूरकप्राणायामसे देह पूरित कर उस पापपुरुषको शुष्क करें, फिर जब पापपुरुष अपने शरीरमें युक्त हो जावे तो रम् इस अग्निबीजको उच्चारण कर उसीसे पाप-पुरुषको भस्म कर दें । फिर यंबीजका उच्चारण कर पापपुरुषके देहकी भस्म रेचक प्राणायामसे बाहर निकालदे, फिर वम् इस अमृतबीजसे पापपुरुषके देहको सींचदे, फिर लम् इस भूमिबीजसे भीगी हुई भस्मको एकत्र करे तदनु सुवर्णाकार उसका अंडा बनावे, तदनु हम्बीज उच्चारण कर मुकुराकार बनावे, फिर उस अण्डाकार भस्ममें मस्तकादि पादपर्यन्त अंगोंकी कल्पना करे, फिर आकाशादि पञ्चभूतोंको उत्पन्न करे, जब उनसे सर्वांग बन जावे तो सोहम् इस मंत्रको पढ जीव और ब्रह्मको एकमें करके जीवको हृदयकमलमें लावे. पूर्वही कुण्डली करके जीव ब्रह्ममें योजित किया गयाथा अब वही कुण्डली परमात्माके संगसे अमृतमय जीवको हृदयाम्भोजमें संस्थापन कर मूलाधारमें प्राप्त हुई तिसका स्मरण करे. देवी नः ( हम लोगोंको ) सुखकारी होवे कैसी देवी हैं रक्तवर्णके अम्भोधिसमुद्रमें टिका हुआ जो पोत ( नौका)

तिसमें उल्लसित जो अरुण लाल सरोज तिसपर आरूढ हैं, फिर कैसी हैं, करकमलोंकरके शूल ईखका धन्वा गुण पाश अंकुश पांच बाण और असृक्कपाल अर्थात् रक्तवर्ण कपाल धारण किये हुई फिर कैसी है, पीन भारी वक्षोरुहों ( कुचों ) करके युक्त हैं, फिर कैसी हैं बालार्कवर्णा ( प्रातःकालीन सूर्यके समान अरुण वर्णवती ) और प्राणशक्ति परा अर्थात् श्रेष्ठा है इस प्रकार प्राण-शक्तिका ध्यान करे जो परमात्मस्वरूप कहाती है। इस प्रकार परमात्मस्वरूपिणी प्राणशक्तिका ध्यान करके सर्वाधिकृतिकी सिद्धिके लिये विभूति धारण करे। विभूतिधारणसे महाफलकी प्राप्ति होती है यह मैंने विस्तारपूर्वक कहा यह भस्मधारण करना श्रुति-स्मृतियों-नेभी प्रमाणभूत और उत्तम माना है ॥ १-२१ ॥

इति भाषाभाष्यसमेत गायत्रीतंत्रका अष्टम पटल समाप्त ॥ ८ ॥

---

# अथ नवमः पटलः ।

## श्रीनारायण उवाच ।

अथातः श्रूयतां ब्रह्मन् गायत्र्याः पापनाशनम् । पुर-श्चरणकं पुण्यं यथेष्टफलदायकम् ॥ १ ॥ पर्वताग्रे नदी-तीरे बिल्वमूले जलाशये । गोष्ठे देवालयेऽश्वत्थ उद्याने तुलसीवने ॥ २ ॥ पुण्यक्षेत्रे गुरोः पार्श्वे चित्तैकाग्रस्थले-ऽपि च । पुरश्चरणकृन्मन्त्री सिध्यतेव न संशयः ॥ ३ ॥

यस्य कस्यापि मंत्रस्य पुरश्चरणमारभेत् । व्याहृतित्रय-
संयुक्तां गायत्रीं चाऽयुतं जपेत् ॥ ४ ॥ नृसिंहार्कवरा-
हाणां तांत्रिकं वैदिकं तथा । विना जप्त्वा तु गायत्रीं
तत्सर्वं निष्फलं भवेत् ॥ ५ ॥ सर्वे शाक्ता द्विजाः प्रोक्ता
न शैवा न च वैष्णवाः । आदिशक्तिमुपासन्ते गायत्रीं
वेदमातरम् ॥ ६ ॥ मंत्रं संशोध्य यत्नेन पुरश्चरण-
तत्परः । मन्त्रशोधनपूर्वांगमात्मशोधनमुत्तमम् ॥ ७ ॥
आत्मतत्त्वशोधनाय त्रिलक्षं प्रजपेद्बुधः । अथवा चैक-
लक्षं तु श्रुतिप्रोक्तेन वर्त्मना ॥ ८ ॥ आत्मशुद्धिं विना
कर्तुर्जपहोमादिकाः क्रियाः । निष्फलास्तास्तु विज्ञेयाः
कारणं श्रुतिनोदितम् ॥ ९ ॥ तपसा तापयेद्देहं पितृ-
देवांश्च तर्पयेत् । तपसा स्वर्गमाप्नोति तपसा विंदते महत्
॥१०॥क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः।धनेन वैश्यः
शूद्रस्तु जपहोमैर्द्विजोत्तमः ॥ ११ ॥ अतएव तु विप्रेन्द्र
तपः कुर्यात्प्रयत्नतः । शरीरशोषणं प्राहुस्तापसास्तप
उत्तमम् ॥ १२ ॥ शोधयेद्विधिमार्गेण कृच्छ्रचांद्रायणा-
दिभिः । अथान्नशुद्धिकरणं वक्ष्यामि शृणु नारद॥१३॥
अयाचितोञ्छशुक्लाख्यभिक्षावृत्तिचतुष्टयम् । तांत्रिकै-

वैदिकैश्चैवं प्रोक्तान्नस्य विशुद्धता ॥ १४ ॥ भिक्षान्नं शुद्धमानीय कृत्वा भागचतुष्टयम् । एकं भागं द्विजेभ्यस्तु गोग्रासस्तु द्वितीयकः ॥ १५ ॥ अतिथिभ्यस्तृतीयस्तु तदूर्ध्वं तु स्वभार्ययोः । आश्रमस्य यथा यस्य कृत्वा ग्रासविधिं क्रमात् ॥ १६ ॥ आदौ क्षिप्त्वा तु गोमूत्रं यथाशक्ति यथाक्रमम् । तदूर्ध्वं ग्राससंख्या स्याद्वानप्रस्थ-गृहस्थयोः ॥ १७ ॥ कुक्कुटांडप्रमाणं तु ग्रासमानं विधीयते । अष्टौ ग्रासा गृहस्थस्य वनस्थस्य तदर्धकम् ॥ १८ ॥ ब्रह्मचारी यथेष्टं च गोमूत्रविधिपूर्वकम् । प्रोक्षणं नववारं च षड्वारं च त्रिवारकम् ॥ १९ ॥ निश्छिद्रं च करं कृत्वा सावित्रीं च तादित्यृचम् । मन्त्र-मुच्चार्य मनसा प्रोक्षणे विधिरुच्यते ॥ २० ॥ चौरो वा यदि चांडालो वैश्यः क्षत्रस्तथैव च । अन्नं दद्यात् यः कश्चिद्धर्मौ हि विधिरुच्यते ॥२१ ॥ शूद्रान्नं शूद्रसम्पर्कं शूद्रेण च सहाशनम् । ये यांति नरकं घोरं यावच्चन्द्र-दिवाकरौ ॥२२ ॥ गायत्रीच्छन्दो मंत्रस्य यथा संख्या-क्षराणि च । तावल्लक्षाणि कर्त्तव्यं पुरश्चरणकं तथा ॥ २३ ॥ द्वात्रिंशल्लक्षमानं तु विश्वामित्रमतं तथा ।

जीवहीनो यथा देहः सर्वकर्मसु न क्षमः ॥ २४ ॥ पुर-
श्चरणहीनस्तु तथा मंत्रप्रकीर्तितः । ज्येष्ठाषाढौ भाद्रपदं
पौषं तु मलमासकम् ॥ २५ ॥ अंगारं शनिवारं च
व्यतीपातं च वैधृतिम् । अष्टमीं नवमीं षष्ठीं चतुर्थीं च
त्रयोदशीम् ॥ २६ ॥ चतुर्दशीममावास्यां प्रदोषं च तथा
निशाम् । यमाग्निरुद्रसर्पेन्द्रवसुश्रवणजन्मभम् ॥ २७॥
मेषकर्कतुलाकुम्भान्मकरं चैव वर्जयेत् । सर्वाण्येतानि
वर्ज्यानि पुरश्चरणकर्मणि ॥ २८ ॥ चन्द्रताराऽनुकूले च
शुक्लपक्षे विशेषतः । पुरश्चरणकं कुर्यान्मंत्रसिद्धिःप्रजायते
॥ २९ ॥ स्वस्तिवाचनकं कुर्यान्नांदीश्राद्धं यथाविधि ।
विप्रान्संतर्प्य यत्नेन भोजनाच्छादनादिभिः ॥३०॥ आर-
भेत्तु ततः पश्चादनुज्ञानपुरःसरम् । प्रत्यङ्मुखः शिव-
स्थाने द्विजश्चान्यतमे जपेत् ॥ ३१ ॥ काशीपुरी च
केदारो महाकालोऽथ नासिकम् । त्र्यंबकं च महाक्षेत्रं
पञ्च दीपा इमे भुवि ॥ ३२॥ सर्वत्रैव हि दीपस्तु कूर्मा-
सनमिति स्मृतम्।प्रारम्भदिनमारभ्य समाप्तिदिवसावधि
॥ ३३ ॥ न न्यूनं नातिरिक्तं च जपं कुर्याद्दिने दिने ।
नैरंतर्येण कुर्वन्ति पुरश्चर्यां मुनीश्वराः ॥ ३४ ॥ प्रातरा-

भ्य विधिवज्जपेन्मध्यं दिनावधि । मनः संहरणं शौचं ध्यानं मन्त्रार्थचिन्तनम् ॥ ३५ ॥ गायत्रीछन्दो मंत्रस्य यथा संख्याक्षराणि च । तावल्लक्षाणि कर्त्तव्यं पुरश्चरणकं तथा ॥ ३६ ॥ जुहुयात्तद्दशांशेन सघृतेन पयोऽधसा । तिलैः पत्रैः प्रसूनैश्च यवैश्च मधुरान्वितैः ॥३७॥ कुर्याद्दशांशतो होमं ततः सिद्धो भवेन्मनुः । गायत्री चैव संसेव्या धर्मकामार्थमोक्षदा ॥ ३८ ॥ नित्ये नैमित्तिके काम्यो त्रितये तु परायणः । गायत्र्यास्तु परं नास्ति इहलोके परत्र च ॥ ३९ ॥ मध्याह्नमितभुङ् मौनी त्रिः स्नानार्चनतत्परः । जले लक्षत्रयं धीमाननन्यमानसक्रियः ॥४०॥ कर्मणा यो जपेत्पश्चात्कर्मभिः स्वच्छयाऽपि वा। यावत्कार्यं न सिद्धं तु तावत्कुर्याज्जपादिकम् ॥ ४१ ॥ सामान्यकाम्यकर्मादौ यथावाद्विधिरुच्यते । आदित्यस्योदये स्नात्वा सहस्रं प्रत्यहं जपेत् ॥ ४२ ॥ आयुरारोग्यमैश्वर्यं धनं च लभते ध्रुवम् । षण्मासं वा त्रिमासं वा वर्षान्तं सिद्धिमाप्नुयात् ॥ ४३ ॥ पद्मानां लक्षहोमेन घृताक्तानां हुताशने । प्राप्नोति निखिलं मोक्षं सिध्यत्येव न संशयः ॥ ४४ ॥ मंत्रासिद्धिं विना कर्त्तुंजपहोमादिकाः

क्रियाः । काम्यं वा यदि वा मोक्षः सर्वं तन्निष्फलं भवेत् ॥ ४५ ॥ पंचविंशतिलक्षेण दध्ना क्षीरेण वा हुतात् । स्वदेहे सिध्यते जंतुर्महर्षीणां मतं तथा ॥ ४६॥ अष्टांगयोगसिद्ध्या च नरः प्राप्नोति यत्फलम् । तत्फलं सिद्धिमाप्नोति नात्र कार्या विचारणा ॥ ४७ ॥ शक्तो वापि त्वशक्तो वा आहारं नियतं चरेत् । षण्मासात्तस्य सिद्धिः स्याद्गुरुभक्तिरतः सदा ॥ ४८ ॥ एकाहं पंचगव्याशी चैकाहं मारुताशनः । एकाहं ब्राह्मणान्नाशी गायत्रीजपकृद्भवेत् ॥ ४९ ॥ स्नात्वा गंगादितीर्थेषु शतमंतर्जले जपेत् । शतेनापस्ततः पीत्वा सर्वपापैः प्रमुच्यते॥५०॥ चान्द्रायणादिकृच्छ्रस्य फलं प्राप्नोति निश्चितम् । राजा वा यदि वा विप्रस्तपः कुर्यात्स्वके गृहे ॥५१॥ गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथवापि च । अधिकारपरत्वेन फलं यज्ञादिपूर्वकम् ॥ ५२ ॥ श्रौतस्मार्तादिकं कर्म क्रियते मोक्षकांक्षिभिः । साग्निकश्च सदाचारो विद्वद्भिश्च सुशिक्षितः ॥ ५३ ॥ ततः कुर्यात्प्रयत्नेन फलमूलोदकादिभिः । भिक्षान्नं शुद्धमश्नीयादष्टौ ग्रासान् स्वयं भुजेत् ॥ ५४॥ एवं पुरश्चरणकं कृत्वा मन्त्रसिद्धिमवाप्नुयात् ।

देवर्षे यदनुष्ठानाद्दारिद्र्यं विलयं व्रजेत् ॥ यच्छ्रुत्वापि च पुण्यानां महतीं सिद्धिमाप्नुयात् ॥ ५५ ॥

इति नवमः पटलः ॥ ९ ॥

श्रीनारायणजी वर्णन करते हैं; कि हे नारद ! अब पापनाशन यथेष्टफलदायक और पुण्य गायत्रीके पुरश्चरणकी विधि सुनिये। वह पर्वतके आगे, नदीके तीर, बेलकी छाया, जलाशय, गोशाला, देवालय, पिप्पल, उद्यान, तुलसीवन, पुण्यक्षेत्र, गुरुस्थान इन स्थानोंमें करनेसे सिद्ध होता है। जिस किसी मंत्रका पुरश्चरण करना हो तो तीन व्याहृतिसहित १०००० गायत्री प्रथम जप करे तो उस मंत्रको जपै, नृसिंह वाराह सूर्यादिकके तांत्रिक वैदिक चाहे जो मंत्र हो पर विना प्रथम गायत्रीके जप करनेसे निष्फल होते हैं; कारण कि सब द्विज जिससे प्रथम गायत्रीहीकी उपासना करते हैं इससे शाक्त हैं; वैष्णव और शैव नहीं हैं. प्रथम मंत्र शोधन कर पुरश्चरण करना चाहिये; मंत्रशोधनके पीछे आत्म-शोधन करना चाहिये; आतमतत्त्वशोधनके अर्थ प्रथम ३ लक्ष वा १ लक्ष गायत्री जपे, फिर मंत्रशोधनार्थ १०००० जपे, फिर पुरश्च-रण करे, गायत्रीके पुरश्चरणमेंभी यही रीति है, और विना आतम-शोधनके सम्पूर्ण क्रिया निष्फल होती हैं; तपसे देह तृप्त करनेसे पितर और देवता तृप्त होते हैं; तपहीसे स्वर्ग मिलता है, तपहीसे महत्त्व मिलता है, क्षत्रिय अपनी भुजाओंके बलसे आपदोंको तरता है, वैश्य धनसे, शूद्र ब्राह्मणोंकी सेवासे, ब्राह्मण जप होमसे, देह

कृच्छ्रचांद्रायणादि व्रतोंसे शुद्ध होता है, इससे ब्राह्मणोंको चाहिये कि तप करें. तपस्वीको शरीर शोषण करना चाहिये. प्रथम अन्नकी शुद्धता बताते हैं, अयाचित, उंछ, शुक्ल, भिक्षा यह अन्नकी चार वृत्तियां तांत्रिक और वैदिक दोनोंने शुद्ध कही हैं. भिक्षाका अन्न ले आकर ४ भाग करै, उनमें प्रथम भाग ब्राह्मणोंको, द्वितीय गोग्रास, तृतीय अभ्यागतोंको दे, चतुर्थ भागमें आधा स्त्रीको दे और आधा आप ले, फिर तिस आश्रमवालेको जैसा ग्रासविधि हो वैसा बनाकर ग्रहण करै. प्रथम अन्न तैयार होनेपर जैसा लिखा है कि गोमूत्र छिडककर, तिसके पीछे वानप्रस्थ और गृहस्थके ग्रासका यह प्रमाण है कुक्कुट अर्थात् मुर्गेके अण्डेके समान ग्रास बनावे, फिर गृहस्थ ८ और वानप्रस्थ ४ ग्रास अर्थात् कौर भक्षण करै. ब्रह्मचारी यथेष्ठ ग्रास बनावे, गोमूत्रसे ९ वा ६ वा ३ वार प्रोक्षण करे, अंजलिमें गोमूत्र ले गायंत्री पढ २ के अन्नमें छिडके, यही प्रोक्षणविधि है. कदाचित् भिक्षाके समय चोर, चंडाल, वैश्य और क्षत्रिय अन्न देवे, वह अधम विधि है, और जो शूद्रोंका अन्न खाता, उन्हींका मिलाप करता, उन्हींके साथ ब्राह्मण हो बैठता, वह नरकमें जबतक सूर्य चन्द्रमा रहेंगे तबतक रहेगा, मंत्रका गायत्री तौ छन्द है, और जितने अर्थात् २४ अक्षर होते उतने लक्ष पुरश्चणमें मंत्र जपना चाहिये. विश्वामित्रके मंत्रसे ३२ लक्ष प्रमाण है, जैसे जीवहीन देह कुछ कर्म नहीं कर सक्ता, तैसेही पुरश्चरणहीन मंत्रभी कुछ नहीं कर सक्ता. ज्येष्ठ, आषाढ, भाद्रपद, पौष, मलमास, मंगल, शनिवार, व्यतीपात, वैधृतियोग,

अष्टमी, नवमी, षष्ठी, चतुर्थी, त्रयोदशी, चतुर्दशी, अमावस्यातिथि, प्रदोष, रात्रिके समय, भरणी, कृत्तिका, आर्द्रा, आश्लेषा, ज्येष्ठा, धनिष्ठा, श्रवण, जन्मनक्षत्र इतने नक्षत्र, मेष, कर्क, तुला, कुंभ, मकर ये लग्न सब पुरश्चरणकर्ममें निन्द्य हैं, जिस दिन चन्द्रमा और तारा शुद्ध हो और शुक्ल पक्ष हो उस दिन पुरश्चरणकर्मका आरंभ करनेसे सिद्ध होता है. प्रारंभ करनेके दिन प्रथम स्वस्ति- वाचन करे, फिर नान्दीमुख श्राद्ध करे, तदनु भोजनाच्छाद- नादिसे ब्राह्मणोंको तृप्त करके पुरश्चरणका प्रारम्भ करना चाहिये जो पश्चिममुखको शिवालयमें करे, नहीं तो अन्यही शिवस्थानमें काशीपुरी, केदार, महाकालस्थान, नाशिकक्षेत्र, त्र्यम्बक, क्षेत्र यह ९ सिद्धस्थान हैं, और चाहे जहां करे, पर कूर्मासनपर स्थित होकर जपे तो सिद्ध हो जावे. प्रारम्भके दिनसे समाप्त पर्यंत न्यून वा आधिक जप न करे, किन्तु जितना प्रथम दिन करे उतनाही करता जाय, प्रातःकालसे मध्याह्न- तक मन्त्र जपे, जप समय मनको काबूमें किये शौचसहित मन्त्रके अर्थमें ध्यान किये रहे, जितने अक्षर मन्त्रमें हों उतने लक्षका पुरश्चरण होता है, मंत्रका दशांश घृतादिसे होम करे, उसमें तिल, बिल्वपत्र, पुष्प, यवभी मिलावे. दशांश हवन करनेसे मंत्र सिद्ध होजाता है. गायत्री धर्म काम अर्थ मोक्ष देनेवाली सब कार्योंमें सेवा करनेके योग्य है. जो नित्य नैमित्तिक और काम्य इन तीनों कर्मोंमें रत हो गायत्रीकी सेवा करे, क्योंकि उससे परे यहां वहां कुछ नहीं है. मध्याह्नमें थोडा भोजन कर और जो जलमें

३००००० जपता है वह सिद्ध होजाता है. जिस कर्मके लिये मंत्र जपै जबतक उसकी सिद्धि न हो तबतक बराबर जपता रहै, और सामान्य काम्य कर्मके निमित्त तो प्रतिदिन प्रातःकाल स्नान कर १००० बार जपै, सब आयु आरोग्य ऐश्वर्य धन पावै. ६ मास वा ३ वा १२ मास निरन्तर सहस्र जपनेसे यह कार्य होते हैं, और जो जपांतमें लक्ष कमल घी लगा लगाकर होम करता है वह सब काम पाता है, विना मंत्रसिद्धि किये काम्य मोक्षादि सब क्रिया निष्फल होजाती हैं, और दधि वा दुग्धमें चभोर २ कर जो कमलपुष्प २५००० होम करता है वह अपने देहसे सिद्ध होजाता है, चाहे शक्त हो अथवा अशक्त. जो ६ मासतक मंत्र जपता हुआ नियताहार करता है वह सिद्ध होता है, एक दिन पंचगव्य, एक दिन पवनपान, एक दिन ब्राह्मणका अन्न भोजन कर गंगा आदि तीर्थोंमें स्थान कर जलके भीतर जो १०० बार गायत्री जपता और १०० बार मंत्र पढकर जल पीता है, वह सब पापोंसे छूट जाता है; और चांद्रायण कृच्छ्रादि व्रतोंका फल चाहे राजा हो चाहे विप्र जो अपनेही ग्रहमें तपस्या करता है गृहस्थ वानप्रस्थ ब्रह्मचारी यह अपने२अधिकारके समान फल पाते हैं और चाहे जैसा विप्र हो जो तपस्या करता और ब्राह्मणहीके गृहकी भिक्षा ले कौर खाता है और पुरश्चरण करता है उसके मंत्रकी सिद्धि होती है, जिस पुरश्चरणके करनेसे दरिद्र नाश होता और श्रवण करनेसे बडी सिद्धिको प्राप्त होता है ॥ ६-५५ ॥

इति भाषाभाष्यसमेत गायत्रीतंत्रका नवम पटल समाप्त ॥ ९ ॥

# अथ दशमः पटलः।

## नारद उवाच।

नारायण महाभाग गायत्र्यास्तु समासतः। शांत्या-दिकान्प्रयोगांस्तु वदस्व करुणानिधे ॥ १ ॥

अब नारदजी प्रश्न करते हैं कि हे नारायणजी ! गायत्रीके शांत्यादिक प्रयोग वर्णन कीजिये ॥ १ ॥

## श्रीनारायण उवाच।

अतिगुह्यमिदं पृष्टं त्वया ब्रह्मतनूद्भव। न कस्यापि च वक्तव्यं दुष्टाय पिशुनाय च ॥ २ ॥ अथ शांति-र्पयोक्ताभिः समिद्भिर्जुहुयाद्द्विजः। शमीसमिद्भिःशाम्यंति भूतरोगग्रहादयः ॥ ३ ॥ आर्द्राभिःक्षीरवृक्षस्य समिद्भि-र्जुहुयाद्द्विजः। जुहुयाच्छकलैर्वापि भूतरोगादिशांतये ॥ ४ ॥ जलेन तर्पयेत्सूर्यं पाणिभ्यां शांतिमाप्नुयात्। जानुदघ्ने जले जप्त्वा सर्वान् दोषाञ्छमं नयेत् ॥ ५ ॥ कंठदघ्ने जले जप्त्वा मुच्येत्प्राणांतिकाद्भयात्। सर्वेभ्यः शांतिकर्मभ्यो निमज्ज्याप्सु जपः स्मृतः ॥ ६ ॥ सौवर्णे राजते वापि पात्रे ताम्रमयेऽपि वा। क्षीरवृक्षमयं वापि

निर्व्रणे मृन्मयेऽपि वा ॥ ७ ॥ सहस्रं पंचगव्येन हुत्वा सुज्वलितेऽनले । क्षीरवृक्षमयैः काष्ठैः शेषं संपादयेच्छनैः ॥ ८ ॥ प्रत्याहुतिं स्पृशञ्जप्त्वा सहस्रं पात्रसंस्थिताम् । तेन तं प्रोक्षयेद्देशं कुशैर्मंत्रमनुस्मरन् ॥ ९ ॥ बलिं किरं-स्ततस्तस्मिन्ध्यायेत्तु परदेवताम् । अभिचारसमुत्पन्ना कृत्या पापं च नश्यति ॥ १० ॥ देवभूतपिशाचाद्या यद्येवं कुरुते वशे । गृहं ग्रामं पुरं राष्ट्रं सर्वं तेभ्यो विमु-च्यते ॥ ११ ॥ निखनेन्मुच्यते तेभ्यो निखनेन्मध्यतोऽपि च । मंडले शूलमालिख्य पूर्वोक्ते च क्रमेऽपि वा ॥ १२॥ अभिमंत्र्य सहस्रं तन्निखनेत्सर्वशांतये । सौवर्णं राजतं वापि कुंभं ताम्रमयं च वा ॥ १३ ॥ मृन्मयं वा नवं दिव्यं सूत्रवेष्टितमव्रणम् । स्थंडिले सैकते स्थाप्य पूरये-न्मंत्रविज्जलैः ॥१४॥ दिग्भ्य आहृत्य तीर्थानि चतसृभ्यो द्विजोत्तमैः। एलाचन्दनकर्पूरजातीपाटलमल्लिकाः॥१५॥ बिल्वपत्रं तथा क्रान्तां देवीं व्रीहियवांस्तिलान्।सर्षपान्क्षी-रवृक्षाणां प्रवालानि च निक्षिपेत् ॥ १६ ॥ सर्वाण्यभि-विधायैवं कुशकूर्चसमन्वितम् । स्नातः समाहितो विप्रः सहस्रं मंत्रयेद्बुधः ॥ १७ ॥ दिक्षु सौरानधीयीरन्मन्त्रान्

विप्रास्त्रयीविदः । प्रोक्षयेत्पाययेदेनं नीरं तेनाभिषिंचयेत्
॥ १८ ॥ भूतरोगाभिचारेभ्यः स निर्मुक्तः सुखी भवेत् ।
अभिषेकेण मुच्येत मृत्योरास्यगतो नरः ॥ १९ ॥
अवश्यं कारयेद्विद्वान् राजा दीर्घं जिजीविषुः । गावो
देयाश्च ऋत्विग्भ्य अभिषेके शतं मुने ॥ २० ॥ दक्षिणा
येन वा तुष्टिर्यथाशक्त्याऽथवा भवेत् । जपेदश्वत्थमालभ्य
मंदवारे शतं द्विजः ॥ २१ ॥ भूतरोगाभिचारेभ्यो
मुच्यते महतो भयात् । गुडूच्याः पर्वविच्छिन्नः पयोक्ता
जुहुयाद्विजः॥२२॥ एव मृत्युंजयो होमः सर्वव्याधिविना-
शनः । आम्रस्य जुहुयात्पत्रैः पयोक्तैर्ज्वरशांतये ॥२३॥
वचाभिः पयसाक्ताभिः क्षयं हुत्वा विनाशयेत् । मधुत्रित-
यहोमेन राजयक्ष्मा विनश्यति ॥ २४ ॥ निवेद्य भास्क-
रायान्नं पायसं होमपूर्वकम् । राजयक्ष्माभिभूतं च
प्राशयेच्छांतिमाप्नुयात ॥२५ ॥ लताः पर्वसु विच्छिद्य
सोमस्य जुहुयाद्विजः । सोमे सूर्येण संयुक्ते पयोक्ताः
क्षयशांतये ॥ २६ ॥ कुसुमैः शंखवृक्षस्य हुत्वा कुष्ठं
विनाशयेत् । अपस्मारविनाशःस्यादपामार्गस्य तण्डुलैः
॥ २७ ॥ क्षीरवृक्षसमिद्धोमादुन्मादोऽपि विनश्यति ।

औदुम्बरस्य समिद्धोमादतिमेहः क्षयं व्रजेत् ॥ २८ ॥ प्रमेहं शमयेद्धुत्वा मधुनेक्षुरसेन वा । मधुत्रितयहोमेन नयेच्छांतिं मसूरिकाम् ॥२९॥ कपिलासर्पिषा हुत्वा नयेच्छांतिं मसूरिकाम् । उदुम्बरवटाश्वत्थैर्गोगजाश्वामयंहरेत् ॥३०॥ पिपीलमधुवल्मीके गृहे जाते शतं शतम् । शमीसमिद्भिरन्नेन सर्पिषाजुहुयाद्द्विजः॥३१॥तदुत्थं शांतिमायाति शेषैस्तत्र बलिं हरेत् । अभ्रस्तनितभूकंपा लक्ष्यादौ वनवेतसः ॥ ३२ ॥ सप्ताहं जुहुयादेवं राष्ट्रे राज्यं सुखी भवेत् । यां दिशं शतजप्तेन लोष्ठेनाभिप्रताडयेत् ॥३३॥ ततोऽग्निमारुतारिभ्यो भयं तस्य विनश्यति । मनसैव जपेदेनां बद्धो मुच्येत बंधनात् ॥ ३४ ॥ भूतरोगविषादिभ्यः स्पृशन् जप्त्वा विमोचयेत् । भूतादिभ्यो विमुच्येत जलं पीत्वाभिमंत्रितम् ॥ ३५ ॥ अभिमंत्र्य शतं भस्मन्यसद्भूतादिशांतये । शिरसा धारयेद्भस्म मंत्रयित्वा तदित्यृचा ॥ ३६ ॥ सर्वव्याधिविनिर्मुक्तः सुखी जीवेच्छतं समाः । अशक्तः कारयेच्छांतिं विप्रं दत्त्वा तु दक्षिणाम् ॥ ३७ ॥ अथ पुष्टिं श्रियं लक्ष्मीं पुष्पैर्हुत्वाप्नुयाद्द्विजः । श्रीकामो जुहुयात्पद्मैः रक्तैः

श्रियमवाप्नुयात् ॥ ३८ ॥ हुत्वा श्रेयमवाप्नोति जाती-
पुष्पैर्नवैः शुभैः । शालितंडुलहोमेन श्रियमाप्नोति पुष्क-
लाम् ॥ ३९ ॥ समिद्भिर्बिल्ववृक्षस्य हुत्वा श्रियमवाप्नु-
यात् । बिल्वस्य शकलैर्हुत्वा पत्रैः पुष्पैः फलैरपि ॥४०॥
श्रियमाप्नोति परमां मूलस्य शकलैरपि । समिद्भिर्बिल्व-
वृक्षस्य पायसेन च सर्पिषा ॥ ४१ ॥ शतं शतं च सप्ताहं
हुत्वा श्रियमवाप्नुयात् । लाजैस्तु मधुरोपेतैर्होमे कन्या-
मवाप्नुयात् ॥ ४२ ॥ अनेन विधिना कन्या वरमाप्नोति
वांछितम् । रक्तोत्पलशतं हुत्वा सप्ताहं हेम चाप्नुयात्
॥ ४३ ॥ सूर्यबिंबे जलं हुत्वा जलस्थं हेम चाप्नुयात् ।
अन्नं हुत्वाप्नुयादन्नं व्रीहिर्व्रीहिपतिर्भवेत् ॥ ४४ ॥
करीषचूर्णैर्वत्सस्य हुत्वा पशुमवाप्नुयात् । प्रियंगुपायसा-
ज्यैश्च भवेद्धोमादिभिः प्रजा ॥ ४५ ॥ निवेद्य भास्करा-
यान्नं पायसं होमपूर्वकम् । भोजयेत्तदृतुस्नातां पुत्रं परम-
वाप्नुयात् ॥ ४६ ॥ सप्ररोहाभिरार्द्राभिरायुर्हुत्वा समा-
प्नुयात् । समिद्भिः क्षीरवृक्षस्य हुत्वाऽऽयुषमवाप्नुयात्
॥ ४७ ॥ सप्ररोहाभिरार्द्राभिरक्ताभिर्मधुरत्रयैः । व्रीहीणां
च शतं हुत्वा हेम चायुरवाप्नुयात् ॥ ४८ ॥ सुवर्णकु-

द्भूमलं हुत्वा शतमायुरवाप्नुयात् । दूर्वाभिः पयसावापि मधुना सर्पिषापि वा ॥ ४९ ॥ शतं शतं च सप्ताहमपमृत्युं व्यपोहति । शमीसमिद्भिरन्नेन पयसा वा च सर्पिषा ॥५०॥ शतं शतं च सप्ताहमपमृत्युं व्यपोहति । न्यग्रोधसमिधो हुत्वा पायसं होमयेत्ततः ॥ ५१ ॥ शतं शतं च सप्ताहमपमृत्युं व्यपोहति । क्षीराहारो जपेन्मृत्योः सप्ताहाद्विजयी भवेत् ॥ ५२ ॥ अश्नन्वाग्यतो जप्त्वा त्रिरात्रं मुच्यते यमात् । निमज्ज्याप्सु जपेदेव सद्यो मृत्योर्विमुच्यते ॥ ५३ ॥ जपेद्बिल्वं समाश्रित्य मासं राज्यमवाप्नुयात् । बिल्वं हुत्वाप्नुयाद्राज्यं समूलफलपल्लवम् ॥५४॥ हुत्वा पद्मशतं मासं राज्यमाप्नोत्यकण्टकम् । यवागूं ग्राममाप्नोति हुत्वा शालिसमन्वितम् ॥ ५५ ॥ अश्वत्थसमिधो हुत्वा युद्धादौ जयमाप्नुयात् । अर्कस्य समिधो हुत्वा सर्वत्र विजयी भवेत् ॥ ५६ ॥ संयुक्तैः पयसा पत्रैः पुष्पैर्वा वेतसस्य च । पायसेन शतं हुत्वा सप्ताहं वृष्टिमाप्नुयात् ॥ ५७ ॥ नाभिदघ्ने जले जप्त्वा सप्ताहं वृष्टिमाप्नुयात् । जले भस्म शतं हुत्वा महावृष्टिं निवारयेत् ॥ ५८ ॥ पलाशीभिरवाप्नोति समिद्भिर्ब्रह्म-

र्चसम् । पलाशकुसुमैर्हुत्वा सर्वमिष्टमवाप्नुयात् ॥५९॥
पयो हुत्वाप्नुयान्मेधामाज्यं बुद्धिमवाप्नुयात् । अभिमंत्र्य
पिबेद्ब्राह्मं रसं मेधामवाप्नुयात् ॥ ६० ॥ पुष्पहोमे
भवेद्वासस्तंतुभिस्तद्विधं पटम् । लवणं मधुसंमिश्रं
हुत्वेष्टं वशमानयेत् ॥६१॥ नयेदिष्टं वशं हुत्वा लक्ष्मी-
पुष्पैर्मधुप्लुतैः । नित्यमंजलिनात्मानमभिषिंचञ्जले
स्थिताः ॥ ६२ ॥ मतिमारोग्यमायुष्यमग्र्यं स्वास्थ्यम-
वाप्नुयात् । कुर्याद्विप्रोऽन्यमुद्दिश्य सोऽपि पुष्टिमवाप्नु-
यात् ॥६३॥ अथ चारुविधिमासं सहस्रं प्रत्यहं जपेत् ।
आयुष्कामः शुचौ देशे प्राप्नुयादायुरुत्तमम् ॥ ६४ ॥
आयुरारोग्यकामस्तु जपेन्मासद्वयं द्विजः । भवेदायुष्य-
मारोग्यं श्रियै मासत्रयं जपेत् ॥ ६५ ॥ आयुः श्रीपुत्र-
दाराद्याश्चतुर्भिश्च यशो जपात् । पुत्रदारायुरारोग्यं श्रियं
विद्यां च पंचभिः ॥ ६६ ॥ एवमेवोत्तरान्कामान्मासैरेवो-
त्तरैर्व्रजेत् । एकपादो जपेदूर्ध्वबाहुः स्थित्वा निराश्रयः
॥ ६७ ॥ मासं शतत्रयं विप्रः सर्वान्कामानवाप्नुयात् ।
एवं शतोत्तरं जप्त्वा सहस्रं सर्वमाप्नुयात् ॥ ६८ ॥
रुद्ध्वा प्राणमपानं च जपेन्मासं शतत्रयम् । यदिच्छेत्त-

दवाप्नोति सहस्रात्परमाप्नुयात् ॥ ६९ ॥ एकपादो जपेदूर्ध्वबाहू रुद्धानिलं वशः । मासं शतमवाप्नोति यदिच्छेदिति कौशिकः ॥ ७० ॥ एवं शतत्रयं जप्त्वा सहस्रं सर्वमाप्नुयात् । निमज्ज्याप्सु जपेन्मासं शतमिष्टमवाप्नुयात् ॥ ७१ ॥ एवं शतत्रयं जप्त्वा सहस्रं सर्वमाप्नुयात् । एकपादो जपेदूर्ध्वबाहू रुद्धो निराश्रयः ॥ ७२ ॥ नक्तमश्नन्हविष्यान्नं वत्सराद्दर्षितामियात् । गरिमोवा भवेदेवं जप्त्वा संवत्सरद्वयम् ॥७३॥ त्रिवत्सरं जपेदेवं भवेत्त्रैकालदर्शनम् । आयाति भगवान्देवश्चतुःसंवत्सरं जपेत् ॥ ७४ ॥ पंचभिर्वत्सरैरेवमणिमादिगुणो भवेत् । एवं षड्वत्सरं जप्त्वा कामरूपित्वमाप्नुयात् ॥ ७५ ॥ सप्तभिर्वत्सरैरेवममरत्वमवाप्नुयात् । मनुत्वं नवभिः सिद्धिर्मिद्रत्वं दशभिर्भवेत् ॥ ७६ ॥ एकादशभिराप्नोति प्राजापत्यं तु वत्सरैः । ब्रह्मत्वं प्राप्नुयादेवं जप्त्वा द्वादशवत्सरात् ॥ ७७ ॥ एतेनैव जिता लोकास्तपसा नारदादिभिः । शाकमन्ये परे मूलं फलमन्ये पयः परे ॥ ७८ ॥ घृतमन्ये परे सोममपरे चरुवृत्तयः । ऋषयः पक्षमश्नाति केचिद्भै-

स्याशिनोऽहनि ॥ ७९ ॥ हविष्यमपरेऽश्नंत कुर्वन्त्येवपरं तपः । अथ शुद्ध्यै रहस्यानां त्रिसहस्रं जपेद्विजः ॥ ८० ॥ मासं शुद्धो भवेत्स्तेयात्सुवर्णस्य द्विजोत्तमः । जपेन्मासं त्रिसाहस्रं सुरापः शुद्धिमाप्नुयात् ॥ ८१ ॥ मासं जपेत्रिसाहस्रं शुचिः स्याद्गुरुतल्पगः । त्रिसहस्रं जपेन्मासं कुटीं कृत्वा वने वसन् ॥ ८२ ॥ ब्रह्महा मुच्यते पापादिति कौशिकभाषितम् । द्वादशाहं निमज्याप्सु सहस्रं प्रत्यहं जपेत् ॥ ८३ ॥ मुच्येरन्नंहसः सर्वे महापातकिनो द्विजाः । त्रिसाहस्रं जपेन्मासं प्राणाना यम्य वाग्यतः ॥ ८४ ॥ महापातकयुक्तो वा मुच्यते महतो भयात् । प्राणायामसहस्रेण ब्रह्महापि विशुध्यति ॥ ८५ ॥ षट्कृतस्त्वभ्यसेदूर्ध्वं प्राणापानौ समाहितः । प्राणायामो भवेदेष सर्वपापप्रणाशनः ॥ ८६ ॥ सहस्रमभ्यसेन्मासं क्षितिपः शुचितामियात् । द्वादशाहं त्रिसाहस्रं जपेद्वि गोवधे द्विजः ॥ ८७ ॥ अगम्यागमनस्तेयहननाभक्ष्यभक्षणे । दशसाहस्रमभ्यस्ता गायत्री शोधयेद्विजम् ॥ ८८ ॥ प्राणायामशतं कृत्वा मुच्यते सर्वकिल्बिषात् । सर्वेषामेव पापानां शंकरे सति शुद्धये ॥ ८९ ॥ सहस्र-

मभ्यसेन्मासं नित्यजापी वने वसन् । उपवाससमं जप्य त्रिसहस्रं तदित्यृचः ॥ ९० ॥ चतुर्विंशतिसाहस्रमभ्यस्ता कृच्छ्रसंज्ञिता । चतुःषष्टिसहस्राणि चांद्रायणसमानि तु ॥९१ ॥ शतकृत्वोऽभ्यसेन्नित्यं प्राणानायम्य संध्ययोः । तदित्यृचमवाप्नोति सर्वपापक्षयं परम् ॥९२॥ निमज्याप्सु जपेन्नित्यं शतकृत्वस्तदित्यृचम् । ध्यायन्देवीं सूर्यरूपां सर्वपापैः प्रमुच्यते ॥ ९३ ॥ इति ते सम्यगाख्याताः शांतिशुध्यादिकल्पनाः । रहस्यातिरहस्याश्च गोपनीयास्त्वया सदा ॥ ९४॥ इति संक्षेपतः प्रोक्तः सदाचारस्य संग्रहः । विधिनाचरणादस्य माया दुर्गा प्रसीदति ॥९५॥ नैमित्तिकं च नित्यं च काम्यं कर्म यथाविधि । आचरेन्मनुजः सोऽयं भुक्तिमुक्तिफलाप्तिभाक् ॥ ९६ ॥ आचारः प्रथमो धर्मो धर्मस्य प्रभुरीश्वरी । इत्युक्तं सर्वशास्त्रेषु सदाचारफलं महत् ॥९७॥ आचारवान्सदा पूतः सदेवाचारवान्सुखी । आचारवान्सदा धन्यः सत्यं सत्यं च नारद ॥९८॥ देवीप्रसादजनकं सदाचारविधानकम् । यदपि शृणुयान्मर्त्यो महासंपत्तिसौख्यभाक् ॥ ९९ ॥

सदाचारेण सिध्येच्च ऐहिकामुष्मिकं सुखम् । तदेव ते मया प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ १०० ॥

इति दशमः पटलः ॥ १० ॥

यह सुन नारायणजी कहने लगे कि अति गुप्त बात अपने पूछी है परन्तु इसका आप किसी दुष्ट चुगुलसे न कहना, हवन करनेसे शांति होती है. यथा १०८ शमीकी समिधोंसे होम करनेसे भूत रोग ग्रहादि शांत होते हैं, दुधारे वृक्षोंकी ओदी लकडियोंसे भी हवन करनेसे रोगादि शांत होते हैं और फिर जलसे सूर्यका तर्पण करै तौभी सब शांतियां होती हैं, टिहुनीभर पानीमें खडा होकर जपै तौ सब सिद्धि पावै, कण्ठभर पानीमें खडा होकर जपनेसे प्राणके नाश होनेके भयसे छूटता है, सब शांतिकर्मोंके अर्थ पानीहीमें जपना उत्तम होता है वा सुवर्ण, चांदी, ताम्र, क्षीरवृक्षके काष्ठके पात्र वा बिन छेदके मिट्टीके वर्तनमें पंचगव्य धरकर दुधारे वृक्षकी लकडियोंसे होम करै, प्रति आहुतिमें पंचगव्य स्पर्श कर लिया करै, और अंतमें पंचगव्यहीसे सर्व स्थान छिरकके बलि प्रदान कर देवीका ध्यान करै, इस प्रकार करनेसे अभिचारसे उत्पन्न कृत्या शांत होजाती है. दैव भूत पिशाचादिके वश होनेके अर्थभी इसी प्रकार करे तौ सब वे गृह ग्राम राज्य देश छोडकर वश होजाय. चतुष्कोणयन्त्रमें गन्धसे शूल लिख सहस्र गायत्री जप कहीं गाड आवै तो सब सिद्ध होजाय वा सोना, चांदी, ताम्र, मिट्टी चाहै जिसका पात्र हो सूत्रसे वेष्टित कर वालुयुक्त स्थानपर

धर मंत्र पढता हुआ जलसे पूरित करै, जल चारों दिशोंके तीर्थोंसे लाकर, इलायची चन्दन, कपूर, जाती, पाटल, बेला, बिल्वपत्र, विष्णुकांता, सहदेई, यव, तिल, सरसों, दुधारे वृक्षोंके पल्लव छोड़कर कुशकी कूंची उसीमें धर स्नान कर सहस्र वार मंत्र जपै और भूतादिबाधापीडित पुरुषको पियाकर फिर उसके ऊपर गायत्री पढ २ कर छिडके तौ वह भूत रोगादिसे छुटकर सुखी होजाय, चाहै मृत्युके मुखमेंभी पडगया हो, पर अभिषेकमात्रसे छुट जाता है, और बहुत दिन जीनेकी इच्छा जिस राजाके होय वह अवश्यही इसे करावै, पर वह अभिषेकके समय ऋत्विजोंको १०० गाय देवै, वा ऐसी दक्षिणा दे जिसमें द्विज लोग सन्तुष्ट होजाय वा अपनी शक्तिके अनुसार देवे, और शनैश्चरके दिन पिप्पलके नीचे जो द्विज १०० वार जपता है वह भूत रोग और अभिचारसे छुट जाताहै और जो दूधमें बोर २ कर गुर्चकी समिधोंसे होम करता है वह सब व्याधियोंसे मुक्त होताहै. ज्वर शांत होनेके अर्थ दूधमें चभोरके आम्रके पत्तोंसे होम करना चाहिये और दुग्धहीके साथ बचसे होम करनेसे क्षयी रोग मिटता है. दूध, दधि घी इन तीनोंके हवनसे राजयक्ष्मा रोग मिटता है, और नहीं तो खीर बनाकर सूर्य्यको अर्पण कर होम करै, शेष राजयक्ष्माके रोगीको खिलावै तो भी वह निरोग होजाय और छेउटाकी डालसे अमावास्याके दिन हवन करनेसेभी क्षयी रोग नष्ट होताहै. कौडिल्लाके फूलोंसे हवन करनेसे कोढ मिटता है. लहाचिचडाके बीजोंसे होम करनेसे अपस्मार रोग जाता है. क्षीरवृक्षोंकी लकडियोंके होमसे उन्माद नाश होजाता है.

गूलरकी लकडीके होमसे आति प्रमेह मिटता है, और मधु वा शर्क-रके होमसे भी प्रमेह मिटता है. मधुत्रितय जो दूध घृत दधि हैं इनके हवनसे जो पैरोमें मसूरिका रोग होताहै सो मिट जाताहै. गूलर वट पिप्पलकी समिधोंके हवनसे क्रमसे गौ हाथी घोडे इनके रोग मिटते हैं. चैंटी और मधु मक्खीका छत्ता गृहमें लग जानेसे घृत २ शमी समिधसे होम करना चाहिये और बिजलीसे भूमि-कंप हो तो वनबेतकी समिधासे हवन करै. जिस दिशामें दिग्दाह हो सात दिनतक मंत्र जपकर ढेलेसे उस दिशाको मारे तौ शान्त होजाय; और जो कहीं बंधनमें पडाहो तो मनहीमें गायत्री जपने-से छूट सकता है. भूत प्रेत पिशाचादिपीडितको कुशसे छूकर मंत्र जपै और वही जल उसे पियादे तौ उनकी पीडाओंसे वह छुट जाता है और भूतादिबाधा विभूति लगानेसेभी शान्त हो जाती है. पुष्टि श्री लक्ष्मी पानेके अर्थ पुष्पसे हवन करनेसे इन्हें पाता है और शोभाकी कामना हो तो लालकमलसे हवन करै और जातीपुष्पके होमसे लक्ष्मी मिलती है; जडहनके चावलसेभी होम करनेसे लक्ष्मी मिलती है, बिल्ववृक्षकी समिधोंसेभी श्री मिलती है, तीन मधु मिलाकर लाजाभे होम करनेसे कन्या सुन्दर पति पाती है. लाल कमल पुष्प ७ दिन हुननेसे सोना मिलता है. सूर्यमंडलमें जल छोडनेसे जलमें स्थित जो सुवर्ण है सो मिलता है, अन्नहोम कर-नेसे अन्न पाता है, बछेरेके गोबरके होम करनेसे पशु मिलते हैं; काकुनि जाउरि घृतके होमसे प्रजा मिलती है. होमपूर्वक पायस सूर्यको अर्पण कर ऋतुस्नान किये हुई स्त्रीको भोजन करानेसे पुत्र

मिलता है. पलास समिधके होमसे आयु मिलती है, क्षीरवृक्षकी समिधसेभी आयु मिलती है; सुवर्णकमलके होमसे १०० वर्ष जीता है; दूर्वा, दुग्ध, मधु घृतकेभी होमसे सौ२ आहुति देनेसे अपमृत्यु नहीं होता है. सात दिन केवल दुग्धपान कर २ के होम करे तौ मृत्युको जीतले, तीन रात्रि बिन खाये रहकर मंत्र जपै तौ यम-भयसेही छूटै जलमें डुबकी मारकर गायत्री जपनेसे उसी क्षण मृत्युसे छूटताहै, बेलके नीचे मासभर जपै तौ राज्य पावै. मूलफल पल्लवसहित बिल्वके हवनसेभी राज्य मिले, १०० कमल मासपर्य-न्त हुननेसेभी राज्य मिलता, जडहनसहित यवागुहवन करनेसे एक, ग्राम मिले, पीपलकी समिधोंसे होम करनेसे युद्धमें विजयी होवे मंदारकी समिधोंसे हवन करनेसे सर्वत्र विजयी होवे, वेतके पुष्प वा पत्र मिलाकर पायससे हवन करनेसे वृष्टि होती है. जलमें नाभि-मात्र जलमें खडे होकर ७ दिन गायत्री जपनेसे भी वृष्टि होती है. १०० वार भस्म हुननेसे महावृष्टि निवारण होती है, पलाशसमिधके होमसे ब्रह्मतेज बढता है, पलाशके पुष्पोंके हवनसे सब इष्ट मिलते हैं, दुग्धके हवनसे धारणावती बुद्धि और घृतके हवनसे सब मिलती, ब्रह्मीका रस अभिमंत्रण करके पीनेसेभी धारणावती बुद्धि मिलती है, पुष्पमात्रके हवनसे वास और डोडोंके होमसे उसी प्रकार का वस्त्र मिलता, मधु मिलाकर लोंन हुननेसे इष्ट वश होता, बिल्व पुष्प मधु मिलाकर लोन हुननेसे इष्ट वश होता, तथा बिल्वपुष्प मधु मिलाकर हुननेसेभी इष्ट वश होताहै, जलमें टिककर नित्य २ अंजलीसे अपने ऊपर जल छिडकनेसे मति, आरोग्य, आयुष्य,

अग्रता स्वस्थता सब मिलती हैं.ब्राह्मण दूसरेके लिये करै तौ वहभी
पुष्टताको प्राप्त होता और मासपर्यन्त विधिपूर्वक प्रतिदिन १०००
गायत्री जपै तो आयुर्बल बढै, आयु आरोग्य दोनोंकी कामना हो
तो दो मासतक जपै, लक्ष्मीके अर्थ तीन मासतक आयु, लक्ष्मी
पुत्र स्त्री यश यह ४मास जपनेसे होते हैं, पुत्र स्त्री आयु आरोग्य
लक्ष्मी और विद्या ५ मास जपनेसे मिलती और एक पादसे खडे
हो ऊपरको बाहु उठाकर जो मासभर ३०० मन्त्र प्रतिदिन जपता
वह सब काम पाताहै, इसी प्रकार११०० जपनेसे सब काम मिलते
हैं. प्राण अपान वायु रोककर मास भर३००मंत्र जपनेसे जो इच्छा
करै सो पाता है, सहस्र जपनेसे अभीष्ट प्राप्ति होती है विश्वामित्रजीका
मत है कि ऊपरको बाहु उठाकर एक पादसे खडा होकर मासभर
१०० मंत्र जपनेसे जो चाहै सो मिलता है, इसी प्रकार १३००
जपनस सब मिलता है, इसी प्रकार एकपाद ऊर्ध्वबाहु हावष्यान्न
भक्षण कर ७ दिन जपनेसे मनुष्य ऋषि होजाता है,२ वर्षतक इसी
प्रकार जपनेसे अमोघवाणी होजाती है, ३ वर्ष इसी प्रकार जपनेसे
त्रिकालदर्शी होजाताहै,४ वर्ष जपनेसे सूर्य उसके निकट चले आते
हैं, ५ वर्ष ऐसेही जपनेसे अणिमादि सिद्धियां प्राप्त होती हैं, ६ वर्ष
ऐसेही जपनस जहां चाहै जैसा वेष बनाकर चला जाय, ७ वर्षमें
ऐसेही अमरताको पहुँचता है, ९ वर्षमें मनुत्व और१०वर्षमें इन्द्रत्व
मिलता है. ११ वर्षमें प्राजापत्यको १२ वर्षमें ब्रह्माके भावको प्राप्त
होता है, इसी जपसे नारदादिकोंने सब लोग जीतलिये. कोई शाक
कोई मूल फल दुग्ध घृत खीर भिक्षादि भोजन करते थे अब यह

जानो कि गुप्त प्रकार पाप निवारणके अर्थ ३००० जपना चाहिये, सुवर्ण चुरानेके पापसे एक मास जपनेसे विप्र छूटता है, जिस विप्रने मदिरा पान किया हो वह मास पर्यन्त ३०० जपै तौ शुद्ध होजाय. गुरुशय्यापर बैठनेवाला भी ३०० मासभर जपै, ब्रह्महत्या करनेवाला वनमें कुटी बना वहीं बसकर ३०० मासभर जपै तौ शुद्ध होजाय, चाहै जैसा पाप किया हो १२दिनतक स्नान कर कर के जलमें १०००गायत्री जपै तौ शुद्ध हो प्राणायाम करके ।३००० मासभर जपनेसे महापातकी भी छूट जाता है, सहस्र प्राणायाम करनेसे ब्रह्महत्या मिट जाती है, प्राणापान ६ वार ऊपरको करके जो प्राणायाम किया जाता है वह सब पाप नाशता है. मासभर सहस्र जपनेसे राजा शुद्धताको प्राप्त होता, गोवध होजानेपर बारह दिनतक ३००० जपै अगम्यागमनी, चोर, मारना, अभ्यक्ष भक्षण करना इन दोषोंको मिटानेके अर्थ १०००० गायत्री जपै तो ब्राह्मण शुद्ध हो, १०० प्राणायाम करनेसे सब पापोंसे छूटता. जो सब पापोंको एकही संग मिटाया चाहैं तौ वनमें बसकर नित्य मासभर १००० गायत्री जपै. ३००० जपनेसे एक उपवासके समान पुण्य होता है २४००० का जप कृच्छ्रके समान ६४ ००० चांद्रायणके प्रमाण होता है, दोनों संध्याओंमें सौ २ बार जपनेसे सब पाप छूटते हैं, जलमें डुबकी मारकर नित्य गायत्री १०० जपै तो सब पापोंसे छूटै पर सूर्यरूपिणी देवीका ध्यान करता रहै. नारदजी यह तुमसे शांति शुद्धादिकल्पना रहस्य कहा, तुम इन्हें सदा गुप्त रखना यह सदाचारका संग्रह संक्षेप रीतिसे वर्णन किया

के करनेसे माया दुर्गा प्रसन्न होती हैं; नैमित्तिक और नित्य
जो यथाविधि करता है वह भुक्ति और मुक्ति दोनोंको पाता है ।
पाई–प्रथम धर्म आचार बखाना । धर्म स्वामिनी देवी जाना ॥
कहा सब शास्त्रन माहीं । सदाचारफल सम कछु नहीं ॥ पूत
वी और धन्य अचारी । होत सदा हम सत्य पुकारी ॥ सदाचार
धि देवि प्रसादा । देत सुनत जो मनुज सुनादा ॥ धनी होत सो
व विधि नीके । यह लौकिक्क पर लौकिक ठीके ॥ सदाचारसे होत
हा सब । अबका सुना चहत पूछहु ढब ॥ २–१०० ॥

ति भाषाभाष्यसमेत गायत्रीतन्त्रका दशम पटल समाप्त ॥ १० ॥

इति भाषाभाष्यमेत गायत्रीतंत्र समाप्त ।

---

# जाहिरात ।

कीं॰ रु आ॰

अनुष्ठानप्रकाश—पं॰ चतुर्थीलालकृत—नैमितक कर्ममें परमोपयोगीहै इसमें—अकड मकडचक्र, दीक्षा-पुरश्चरण, सूर्य चन्द्रादि ग्रहणोंमें पुरश्चरण तथा संकल्पादि संगृहीत हैं और अनेक प्रकारके देवी देवताओंके अनुष्ठान प्रकाश किये हैं. .... .... .... .... ६—०

आश्चर्ययोगरत्नमालातन्त्र .... .... .... ०—४

आसुरीकल्प—भाषाटीकासमेत । तन्त्रशास्त्रोंके पुस्तकमें यह भी एक है. .... .... .... .... ०—२

बृहत् इन्द्रजाल—अर्थात् कौतुकरत्न भाण्डागार- ( संस्कृत और भाषा ) मन्त्र, तन्त्र, मोहन, उच्चाटन, वशीकरण प्रयोग और वैद्यक तथा समस्तकार्योंके सिद्धकरनेवाले १३८ यन्त्रोंसमेत संग्राह्य है. .... .... .... २—०

इन्द्रजाल—बडा—मथुराका छपा .... .... .... १—४

उच्छिष्टगणपतिपञ्चांग .... .... .... १—०

उड्डीशतन्त्र--रावणविरचित मूल तथा मुरादावादनिवासी श्यामसुन्दरलाल त्रिपाठीकृत भाषाटीकासहित. .... ०—६

कार्तवीर्यार्जुनोपासनाध्याय—यह ग्रन्थ कार्तकीवीर्योपासकोंको तथा सभी लोगोंको अवश्य लेना चाहिये. .... २—०

कामरत्नतन्त्र—महाराष्ट्र ( मराठी) भाषासहित—इसमें मोहन, वशीकरण इत्यादिके अलावां वैद्यककेभी वाजीकरणादि

की रु॰ आ॰

उत्तम प्रयोग हैं । मराठी जाननेवालोंको बहुतउप-
योगी है .... .... .... .... ५–०

ड्डीशतन्त्र–भाषाटीकासमेत । इन्द्रजिद्विरचित–इसग्र-
न्थमें तात्कालिक सिद्धि तथा प्रत्येक प्रकारके मन्त्रादि
वर्णित हैं .... .... .... .... ०–१०

यत्रीपुरश्चरण॰ .... .... .... .... ०–२

यत्रीपञ्चाङ्ग–इसमें–गायत्रीचक्र, कल्पपद्धति, उपनिषद्,
गायत्रीतत्त्व, गायत्रीकवच, गायत्रीस्तवराज, गायत्री-
पंजरस्तोत्र, गायत्रीसहस्रनाम और गायत्रीपटलादि
संग्रह हैं. .... .... .... .... १–०

प्रसाधनतन्त्र–पं॰ बलदेवप्रसादमिश्रकृत भाषाटीकासहित
इसमें–अनेकप्रकारके योगानुकूल षट्कर्म और गर्भ
इत्यादिका औषधिप्रयोगहै॰ .... .... .... ०–६

ोपालपंचांग–इसमें ( पटल, पद्धति, सहस्रनाम, कवच,
स्तवराज ) यह पांचों अंग हैं .... .... ०–१०

ौतमतन्त्र–महर्षि गौतमप्रणीत । यह वैष्णवोंको परमोप-
योगी तथा श्रीगोपालोपासोंको परमश्रेयस्कर है॰ .... १–८

ंधोत्तमानिर्णयतंत्र–इसमें मद्यका विवेचन है .... ०–८

चतुर्विंशतिगायत्री–श्रीमद्विद्यावारिधि पं॰ ज्वालाप्रसादजी
मिश्रकृत–भाषाटीकासहित॰ .... .... .... ०–४

| | की रु. आ. |
|---|---|
| दत्तात्रेयतन्त्र—भाषाटीकासमेत। यह औषधिप्रयोग इत्यादि २४ पटलोंमें वर्णित है. .... .... .... | ०–६ |
| दुर्गासप्तशती—इसमें-प्रतिश्लोक, बीजमन्त्र, प्रयोगविधि, देवीकवच, अर्गला, कीलक, नवार्णविधि, रात्रिसूक्त सप्तशतीन्यास, दुर्गापाठ, उत्तरन्यास, देवीसूक्त, नवार्णवसन्निवेदन, प्राधानिकरहस्य, वैकृतिरहस्य मूर्तिरहस्यसमेत. ८ पंक्तीकी मोटा अक्षर रेशमी जिल्द गुटका ग्लेज .... .... .... .... | १–१२ |
| " तथा रफ कागज रेशमी गुटका. .... .... | १–४ |
| दुर्गासप्तशती—संपूर्ण घटनाओंके मूर्तिमान् चित्रोंसहित बडा अक्षर चित्रभी देखने योग्य हैं. .... .... | २–० |
| दुर्गासप्तशती—मोटा अक्षर उपरोक्त विषयानुसार खुलीसाँची | १–४ |
| दुर्गासप्तशती—३२ पेजी रेशमी गुटका .... .... | ०–१२ |
| " तथा खुलापत्रा .... .... .... .... | ०–८ |
| दुर्गासप्तशती—६४ पेजी रेशमी गुटका छोटा अक्षर. .... | ०–८ |
| दुर्गासप्तशती—छोटा ताबीज गुटका. .... .... | ०–४ |

---

पुस्तक मिलनेका ठिकाना—

गंगाविष्णु श्रीकृष्णदास,

" लक्ष्मीवेंकटेश्वर " छापाखाना,

कल्याण—मुंबई.